श्रीवेदान्तवागीशभट्टाचार्यविरचितं

# वेदान्तरहस्यम् ।



मुम्बय्यां

"गुजराती" प्रिंटिंगमुद्रणालयाधिपतिना स्वीयमुद्रणालये

संमुद्र्य प्रकाशितम् ।

सन् .  शके १८३४  संवत् १९६८

मूल्यमेकाणकः ।

# विज्ञापनम् ।

त्र्यशीत्यधिकशतसंवत्सरेभ्यः प्राग्लिखितमतिजीर्णं विशीर्णावयवं विलुप्ताक्षरं चैकमेव पुस्तकमवलम्ब्य मुद्रितमिदं पुस्तकम् । अत्र यानि मूलपुस्तके दृष्टानि प्रकृतवाक्येऽनन्वितान्यक्षराणि तानि कुण्डलौ निवेशितानि संदेहस्थले च प्रश्नचिह्नं निवेशितम् । तत्प्रार्थये येषां संग्रहेऽयं ग्रन्थो भवेत्तैस्तत्प्रेषणेन शुद्धपाठप्रतिबोधनेन वाऽनुग्राह्योऽहं येन द्वितीयमुद्रणावसरेताः सर्वा अशुद्धयः संमार्जिता भवेयुरिति ।

प्रकाशकः ।



# वेदान्तरहस्यस्थविषयाणामनुक्रमणिका ।


| विषयः | पृष्ठं. | पङ्क्तिः |
|---|---|---|
| मङ्गलाचरणं ... ... ... ... | १ | ४ |
| पदार्थविभागः ... ... ... ... | १ | ६ |
| चैतन्यविभागः... ... ... ... | १ | ७ |
| अविद्यालक्षणम् ... ... ... | १ | ८ |
| मायालक्षणम् ... ... ... ... | १ | १० |
| जडनिरूपणम् ... ... ... ... | १ | १० |
| अज्ञानस्य भावरूपत्वम् ... ... ... | १ | १२ |
| आवरणविक्षेपशक्त्युदाहरणम् ... ... | २ | १ |
| त्रिविधप्रपञ्चदर्शनात्तुक्कास्तिस्रोऽज्ञानशक्तयः ... | २ | ८ |
| तासां श्रवणादिनिवर्त्यत्वम् ... ... ... | २ | १४ |
| अन्या अप्यज्ञानशक्तयः ... ... ... | २ | २१ |
| श्रवणमनननिदिध्यासनानां लक्षणानि ... | ३ | ३ |
| श्रवणादीनां विधेयत्वम् । ... ... ... | ३ | ९ |
| श्रवणादीनां विधेयत्वाक्षेपः ... ... ... | ३ | ११ |
| तद्विधीनां नियमविधित्वव्यवस्थापनम् ... ... | ४ | १० |
| विधेस्त्रैविध्यम् ... ... ... ... | ५ | १ |
| जीवस्वरूपविचारः ... ... ... | ५ | ४ |
| जीवस्य देहरूपत्वनिरासः ... ... ... | ५ | ६ |
| " इन्द्रियरूपत्वनि० ... ... ... | ५ | १४ |
| " प्राणरूपत्वनिरासः ... ... ... | ५ | १८ |
| " पुत्रादिरूपत्वनिरासः ... ... ... | ६ | ३ |
| " कर्तृभोक्तृरूपत्वनिरासः ... ... ... | ६ | ६ |
| कर्तृत्वादेरध्यासोपाधिकत्वम् ... ... | ६ | ११ |

| विषयः | पृष्ठं | पङ्क्तिः |
|---|---|---|
| अध्यासनिरूपणम् ... ... ... ... | ६ | १२ |
| आत्मनित्यत्वाक्षेपः ... ... ... | ७ | ५ |
| जन्मादिव्यवहाराणां देहोपाधिकत्वम् ... ... | ७ | ६ |
| आत्मनो व्यापकत्वाक्षेपः ... ... ... | ७ | १० |
| तन्निरासः ... ... ... ... | ७ | १२ |
| लिङ्गशरीरे प्रमाणम् ... ... ... | ७ | १६ |
| कृतनाशाकृताभ्यागमनिरासः ... ... | ७ | १७ |
| लिङ्गशरीरस्य तत्वज्ञाननाश्यत्वम् ... ... | ८ | ३ |
| तत्त्वज्ञानोपायाः ... ... ... | ८ | ३ |
| तत्त्वज्ञानाधिकारी ... ... ... | ८ | ९ |
| साधनचतुष्टयम् ... ... ... | ८ | १३ |
| तत्त्वमस्यादिवाक्यार्थविचारः ... ... | ८ | १७ |
| तत्वज्ञानवतो जीवन्मुक्तिः ... ... ... | ९ | ९ |
| संचितकर्मणां नाशः ... ... ... | ९ | १२ |
| प्रारब्धकर्मणां भोगनाश्यत्वम् ... ... | ९ | १५ |
| विदेहकैवल्यम् ... ... ... ... | ९ | १६ |


समाप्तानुक्रमणी।

श्रीगणेशाय नमः।

वेदान्तवागीशभट्टाचार्यविरचितं

# वेदान्तरहस्यम्।

निसर्गसुन्दरं दिव्यं सच्चिदानन्दविग्रहम्।
वन्दे वेदान्तवागीशभट्टाचार्यः सुरेश्वरम्॥ १॥

अथ वेदान्तरहस्यमुच्यते। पदार्थो द्विविधः—चैतन्यं जडश्च। चैतन्यमप्यनेकविधम्। तथाहि—एकमीश्वरसंज्ञं मायोपहितम्। अपरं जीवसंज्ञमविद्योपहितम्। अविद्या च स्वाश्रयव्यामोहिकाऽज्ञानशक्तिः। अपरं च शुद्धं सकलधर्मसंसर्गरहितं मायोपहितं जगत्कारणम्। माया च स्वाश्रयाव्यामोहिकाऽज्ञानशक्तिः। जडं (तु अपरं) त्वज्ञानं(?)तन्मूलमाकाशादि दृश्यत्वादनिर्वचनीयं शुक्तिरजतवत्।

अज्ञानं च नानाशक्तिमत् केवलसाक्षिभास्यं भावरूपम्। तस्य भावरूपत्वं कुत इति चेच्छृणु। चिदानन्दाद्यावरकत्वादाकाशाद्युपादानत्वाच्चाज्ञानं भावरूपमेव न ज्ञानाभावः। नानाशक्तिमत्वं च दृश्यते।

तथाहि—एका तावदावरणशक्तिरपरा विक्षेपशक्तिः । यथा लोके शुक्त्यवच्छिन्नचैतन्याज्ञानशक्त्या शुक्तिस्वरूपमाव्रियते-ऽतः शुक्तित्वं न स्फुरति। शुक्त्यवच्छिन्नचैतन्याज्ञानशक्त्या रजत-लक्षणो विक्षेपः कार्यं जन्यते । एवं मूलाज्ञानशक्त्यापि पूर्णानन्द-स्वरूपमाव्रियते। अत एव पूर्णानन्दस्वरूपमिदानीं न भासते। अप-रया च मूलाज्ञानशक्त्याऽऽकाशादिरूपः परमात्मनि विक्षेपो जन्यते।

अन्याश्चापराः शक्तयोऽज्ञाने सन्ति । तथाहि—पारमार्थिक-प्रपञ्चदर्शनानुकूलैका शक्तिः। तया प्राणिनां पारमार्थिकः प्रपञ्चः प्रतिभाति । अपरा च व्यावहारिकप्रपञ्चदर्शनानुकूला शक्तिः। यया प्राणिनां व्यावहारिकः प्रपञ्चः प्रतिभाति । प्रातिभासिक-प्रपञ्चदर्शनानुकूला चापरा शक्तिः । यया प्राणिनां प्रपञ्चः प्राति-भासिकः प्रतिभाति।

एतास्तिस्रोऽपि शक्तयः क्रमेण श्रवणमनननिदिध्यासनपरिपा-केन निवर्तन्ते । तथाच श्रवणपरिपाकवतः पारमार्थिकः प्रपञ्चो न भासते तच्छक्तेरभावात् । मननपरिपाकवतो व्यावहारिकः प्रपञ्चो न भासते तच्छक्तेरभावात् । निदिध्यासनपरिपाकवतः प्रातिभा-सिकोऽपि प्रपञ्चो न भासते तच्छक्तेरभावात्। तदुक्तम्—

तस्याभिध्यानाद्योजनात्तत्त्वभावाद्
भूयः स्वान्ते विश्वमायानिवृत्तिः ।

एवमन्या अप्यघटितघटनापटीयस्यो बह्व्यः शक्तयः। यथा स्वप्ने

पुमान् चतुर्हस्तपरिमितेऽपवरके तिष्ठन्नपि महत्यां नौकायामहमुपविशामीत्यनुभवति ।

ननु कानि श्रवणमनननिदिध्यासनानि यत्परिपाकेनाज्ञानशक्तित्रयनिवृत्तिः । शृणु । वेदान्तानामखण्डाद्वितीयसच्चिदानन्दात्मन्युपक्रमोपसंहारादिना तात्पर्यावधारणानुकूलो विचारः श्रवणम् । वेदान्तेभ्यः श्रुतस्यात्मनो वेदान्तानुकूलयुक्तिभिरनुचिन्तनं मननम् । विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनम् ।

एतानि निदिध्यासनादीनि विधिविधेयानि भवन्त्यात्मज्ञानार्थितया । तदुक्तम्—'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति ।

ननु श्रोतव्य इत्यत्र को वा विधिः । अपूर्वविधिर्नियमाविधिः परिसंख्याविधिर्वा ? नाद्यः । आत्मज्ञानोपायतया श्रवणस्य प्राप्तत्वात्सर्वतो विरक्तस्य मुमुक्षोः । न द्वितीयः । निर्गुणात्मसाक्षात्कारोद्देशेन साधनद्वयप्राप्त्यभावात् । नियमविधौ तु 'व्रीहीनवहन्यात्' इत्यत्र वैतुष्यसाध्योद्देशेन नखनिकृन्तनावघातादिसाधनद्वयप्राप्तिरस्ति । नचैवं प्रकृते । निर्गुणात्मसाक्षात्कारस्य वेदान्तमात्रैककरणत्वनियमात् । न तृतीयः । प्राप्तार्थबाधाप्राप्तार्थपरिकल्पनं स्यात् । यथा 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र परिसंख्याविधौ पञ्चपञ्चनखभक्षणमापाततः प्राप्तं प्रतीयते तत्त्यक्त्वा पञ्चपञ्चनखातिरिक्ताभक्षणं

कल्प्यते । तथाच प्रकृते परिसंख्याविधावङ्गीक्रियमाणे श्रोतव्य इत्यत्र प्रथमं प्रतीयमानस्य वेदान्तवाक्यश्रवणस्य परित्यागेन वेदान्तवाक्यश्रवणातिरिक्तं न कर्तव्यमित्यर्थः परिकल्प्येत । नचैवं परिकल्प्यते । तस्माच्छ्रोतव्य इत्यादिर्न परिसंख्याविधिः ।

नच ग्रामो द्रष्टव्य इतिवच्छ्रोतव्यादेर्हार्यत्वमिति वाच्यम् । सकलविषयभोगपरित्यागेनातिक्लेशात्मके वेदान्तवाक्यश्रवणादौ प्रेक्षावतो विरक्तस्य विधिमन्तरा प्रवृत्त्यसंभवात् । तस्माच्छ्रोतव्य इत्यादिर्विधिर्वक्तव्य एव । स च पूर्वोक्तरीत्या न संभवतीति प्राप्ते उच्यते ।

श्रोतव्य इत्यादिर्नियमविधिरेवायम् । यदुक्तं निर्गुणसाक्षात्कारोद्देशेन साधनद्वयप्राप्त्यभावादिति तन्न । निर्गुणात्मसाक्षात्कारोद्देशेन 'सदेव सोम्येदमग्र आसीत्' इत्यादीनां वेदान्तवाक्यानाम् 'जन्माद्यस्य यतः' इत्यादीनां पुराणवाक्यानां च प्रवृत्तत्वात् । नच पुराणवाक्यानां परित्यागापत्तिरिति वाच्यम् । तेषामपि वेदान्तवाक्यसहकारित्वेनापेक्षाश्रवणात् 'इतिहासपुराणाद्यैर्वेदार्थमुपबृंहयेत्' इति ।

तथाचायमर्थः—त्रैवर्णिकैर्वेदान्तवाक्येभ्यः प्राधान्येनात्मा श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । स्त्रीशूद्रादिभिश्च पुराण(श्रवण) वाक्यैरेव ब्राह्मणं श्रोतारमग्रतः कृत्वात्मा श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति । यच्चोक्तमपूर्वविधिः परिसंख्याविधिर्नेति तदिष्टमेवेति । तत्रोक्तदूषणसंभवात् ।

विधिश्च लोके त्रिविध एव । तदुक्तमाचार्यैः—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ।। इति ।

ननु जीवस्य श्रवणमननानिदिध्यासनपरिपाकेनाज्ञानगताः शक्तयो निवर्तन्ते इत्युक्तम् । तत्र जीवः किंस्वरूप इति चेत् । ननूक्तमेव पूर्वमविद्योपहितमनस्कतया 'कृशोऽहं स्थूलोऽहम्' इति प्रतीत्यावभासमानोऽपि न देहरूपः । देहरूपत्वे चोच्यमाने कृतहान्यकृताभ्यागमौ स्याताम् ।

तथाहि—यागाचरणदशायां भिन्न एव देहो यागकर्ता, स्वर्गभोगदशायां च भिन्नदेहो भोक्ता तथाचान्येन यागः कृतः, तच्छरीररूपात्महान्याऽपूर्वस्यापि हानिर्जाताऽकर्तुरेव देहस्य भोगो जातः । तथाच वहुवित्तव्ययायाससाध्यपारलौकिके कर्मणि प्रेक्षावतः प्रवृत्तिर्न स्यात् ।

नच काणोऽहं बधिरोऽहमिति प्रतीत्या भासमानोऽपि चक्षुरादिरूप इति वाच्यम् । चक्षुरादे रूपाद्युपलब्धिसाधनत्वेन करणत्वात् । करणस्य वास्यादिवत्कर्तुर्भिन्नत्वनियमात् । अहं चक्षुषा गङ्गां पश्यामीति कर्तुर्भेदोपलम्भाच्च ।

नचाशनायावान् पिपासावानिति प्रतीत्या भासमानः प्राणरूप

इति वाच्यम् । प्राणस्य वाय्वात्मकत्वेनाहं सुखीति प्रतीयमानं मनोग्राह्यत्वं न स्यात् । अस्ति च मनोग्राह्यत्वं तस्मान्न प्राणरूपः ।

पुत्रे पूजितेऽहमेव पूजितः पुत्रेऽपमानितेऽहमेवापमानित इति प्रतीत्या भासमानोऽपि न पुत्ररूपः स्वस्य पुत्रस्य च भेदग्रहस्य स्फुटत्वात् ।

नचाहं कर्ताऽहं भोक्तेति प्रतीत्या कर्तृत्वभोक्तृत्वरूपमेवात्मेति वाच्यम् । विकल्पासहत्वात् । तथाहि—कर्तृत्वभोक्तृत्वस्वरूपं कदाचिद्वा सर्वदा वा । नाद्यः सुषुप्तौ मुक्तौ च तदभावात् । तथा सत्यात्मरूपं नास्तीति स्यात् । अनङ्गीकाराच्च । न द्वितीयः कर्तृत्वादेः कादाचित्कत्वेन स्वरूपत्वं न स्यात् ।

किं तर्हि कर्तृत्वादिकमिति चेच्छृणु, अहंकाराध्यासोपाधिकमेव । तथाहि । अहंकारतादात्म्याध्यासः आत्मनि, आत्मतादात्म्याध्यासोऽहंकारे । अयं च परस्परतादात्म्याध्यासो धर्म्यध्यास इति गीयते । धर्म्यध्यासाद्धर्माध्यासो भवति । कर्तृत्वभोक्तृत्वादिधर्मणश्चिदचिद्ग्रन्थिरूपस्याहंकारस्यात्मनि तादात्म्याध्यासादहं कर्ता भोक्तेत्यादि प्रतीयते । उपलब्धिधर्मण आत्मनोऽहंकारे तादात्म्याध्यासादहमुपलभ इत्यहंकारे प्रतीयते चतुःकोणमयो दहतीतिवत् । यथा चतुष्कोणत्वं दग्धृत्वसामानाधिकरण्येन प्रतीयमानमपि विविच्यमानंसदयोगतमेव। दग्धृत्वं च चतुःकोणत्वसामानाधिकरण्येन

प्रतीयमानमपि विविच्यमानं सदग्निगतमेव। एवं च कर्तृत्वभोक्तृत्वादिकमपि अहंकाराध्यासोपाधिकं ज्ञेयं नात्मनः स्वाभाविकं रूपम्। स्वाभाविकं तु चिद्रूपमेव।

स चात्मानादिर्नित्यो व्यापकः। ननु तर्हि अयं जीवो जातोऽयं मृत इति व्यवहारः कथं प्रतीयत इति चेच्छृणु।

देहलक्षणोपाधिजन्मनैव जात इत्युच्यते। यथा घटोपाधिजन्मनैव घटोपहित आकाशो जात इत्युच्यते। जीवनादृष्टप्रयोज्यात्ममनःसंयोगोपाधिनाशे मृत इत्युच्यते। (यथा) घटनाशे घटोपहिताकाशनाशव्यवहारवत्।

ननु व्यापकश्चेत्तर्हि 'रमणीयचरणा रमणीयां योनिं गच्छन्ति कपूयचरणाः कपूयां योनिं गच्छन्ति' इति श्रुतेरुत्कृष्टापकृष्टकर्माचरणेन कथं स्वर्गनरकभोगाय गमनमिति चेच्छृणु। स्वरूपेण व्यापके आत्मनि गमनासंभवेऽपि षोडशावयवपरिच्छिन्नधर्माधर्मवासनाश्रयलिङ्गशरीरोपाधिना गमनं संभवत्येव।

नच लिङ्गशरीरे मानाभावः। 'षोडशकलः पुरुषः' इतिश्रुतेः, 'अङ्गुष्ठमात्रं पुरुषं निश्चक्राम यमो बलात्' इति पुराणाच्च।

ननु ब्राह्मणदेहावच्छिन्नेन यागे कृते देवदेहावच्छिन्नेन स्वर्गो युज्यते इत्यसमञ्जसमकर्तुर्भोगासंभवादिति चेच्छृणु। स्थूलशरीरभेदेऽपि लिङ्गशरीरस्यैकत्वेन यल्लिङ्गशरीरावच्छिन्नेनात्मना यागः

कृतस्तल्लिङ्गशरीरावच्छिन्नेनात्मना स्वर्गो युज्यते इति कर्तुरेव भोगसंभवान्नासमञ्जसमिति ज्ञेयम् ।

लिङ्गशरीरं तु तत्त्वज्ञानैकनाश्यम् । तच्च तत्त्वज्ञानं काशीमरणहेतुकशंकरोपदिष्टतारकमन्त्रसंजातम् । अथवान्यत्रापि गुरुकृपया वेदान्तवाक्यश्रवणादिसंजनितम् । तच्चान्तःकरणवृत्ति (कार्य) रूपं सविलासाज्ञाननिवर्तकम् । तदुक्तमाचार्यैः—

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥ इति ।

ननु गुरुणा कीदृशस्याधिकारिणस्तत्त्वमस्यादिवाक्योपदेशः क्रियते । यद्वाक्योपदेशेनाहं ब्रह्मास्मीति ज्ञानोत्पत्त्या सकार्याज्ञाननिवृत्तिर्भवतीत्युक्तम् । उच्यते—साधनचतुष्टयसंपन्नस्याधिकारिणस्तत्त्वमस्यादिवाक्योपदेशः क्रियते गुरुणा ।

साधनचतुष्टयं तावत्—नित्यानित्यवस्तुविवेकः ब्रह्मैव नित्यं तदितरदज्ञानाद्यनित्यमिति विवेकः । इहामुत्रार्थफलभोगविरागः । शमदमादिषट्संपत्तिः । मुमुक्षुत्वं च ।

एतच्चतुष्टयं नित्यनैमित्तिककर्मानुष्ठानसंजातचित्तशुद्धिमत एव पुरुषस्य भवति नान्यस्य ।

ननु तत्त्वमसीत्यत्र गुरुणा जीवब्रह्मणोरभेद उपदिश्यते । स च न संभवति । जीवब्रह्मणोर्विरुद्धस्वभावकत्वात् । ब्रह्म च सर्वज्ञं जीवश्चासर्वज्ञः । अतः कथं तयोरभेद इति चेच्छृणु ।

जहदजहल्लक्षणयाऽभेदो भविष्यति सोऽयं देवदत्त इतिवत् । तत्पदे जगत्कर्तृत्ववैशिष्ट्यं परित्यज्य चैतन्यमात्रमुपादीयते । त्वंपदेऽज्ञातृत्ववैशिष्ट्यं परित्यज्य चैतन्यमात्रमुपादीयते । तथाच 'तत्त्वमसि' इति चैतन्यमेकमित्यर्थः ।

दृष्टान्ते स इत्यत्र पूर्वदेशकालवैशिष्ट्यं परित्यज्य देवदत्तस्वरूपमात्रमुपादीयते । अयमित्यत्र एतद्देशकालवैशिष्ट्यं परित्यज्य देवदत्तस्वरूपमुपादीयते । तेन देवदत्तस्वरूपमेकमेव ।

इदं तत्त्वमस्यादिवाक्यमखण्डार्थम् । न संसर्गगोचरप्रमाजनकम् ।

एवं तत्त्वमस्यादिवाक्योत्थसम्यक्साक्षात्कारजनावपि देहारम्भकप्रारब्धप्रतिबन्धे सति अज्ञानतत्कार्यपुरःसरं प्रपञ्चं दग्धपटन्यायेन व्यवहरन्नपि विद्वान् शिष्योपदेष्टा जीवन्मुक्तो भवति संचितकर्मणां विनाशोऽपि ।

अत्र श्रीमद्भगवद्वाक्यं प्रमाणम् 'ज्ञानाग्निः सर्वकर्माणि' इति । सर्वकर्माणि संचितानीत्यर्थः । नतु प्रारब्धानि, तेषां भोगैकनाश्यत्वात् ।

प्रारब्धनाशानन्तरमचिरेण प्राप्तस्वस्वरूपविदेहकैवल्यो भवति ।

इति श्रीवेदान्तवागीशभट्टाचार्य विरचितं वेदान्तरहस्याख्यं वेदान्तप्रकरणं समाप्तम् ।

---

## विक्रेयसंस्कृतपुस्तकानि ।

श्रीमद्भगवद्गीता । Bhagavat-Geeta with 6 commentaries प्रथमो गुच्छ. मूल्यम् रू. ६-०-०

श्रीमद्भगवद्गीता ।

द्वितीयो गुच्छः । प्रथमषट्कम् ।

Bhagavat-Geeta with 8 another commentaries, 1st part मूल्यं रू. ३-१२-०

टीकात्रयोपेतं

श्रीमद्वाल्मीकिरामायणम् ।

बालकाण्डम् ।

Valmiki Ramayana with 3 well-known commentaries मू. रू. ३-०-०.

कारिकावली

सिद्धान्तमुक्तावलीसहिता ।

Karikavalee with Siddhanta-Muktavali and other notes मू. रू. ०-७-०

कुमारसंभवं महाकाव्यम् । Kumar Sambhav with 3 known commentaries मू. १-४-०

स्तोत्रमुक्ताहारः । Stotra-muktahar containing 256 stotras मू. रू. ०-८-०

'गुजराती' प्रिंटिंग मुद्रणालयाधिपतिः । कोट सासून बिल्डिंग-मुंबई.

